चमत्कारप्रयोजनम्—

काव्यस्य श्रुतिना रङ्गरूपकदर्शनेन वा ।
चमत्कारस्य चक्येन चित्तं द्रवति सत्वरम् ॥ ९ ॥

ततो यो जायते ह्लादः भावुकेनानुभूयते ।
आनन्दानुभवः सैव चमत्कारप्रयोजनम् ॥ १० ॥

चमत्कारहेतुः—

शक्तिनिपुणताभ्यासैर्विशिष्टैः काव्यहेतुभिः ।
कविना तन्यते काव्यं चमत्कारसुवासितम् ॥ ११ ॥

प्रज्ञा सा प्रतिभा प्रोक्ता नवोन्मेषणशालिनी ।
या स्फुरणात्मिकी भूत्वा व्यनक्ति तां चमत्कृतिम् ॥ १२ ॥

न काव्यार्थविरामोऽस्ति यदि स्यात्प्रतिभागुणः ।
तदभावे च न भूयात्काव्यनिर्माणसम्भवः[1] ॥ १३ ॥

शक्तिजाच्च चमत्कारात् सर्वोऽप्यर्थः प्रवर्तते ।
एतत्सम्पर्कमासाद्य काव्यं काव्यमुदीर्यते ॥ १४ ॥

शक्तिव्युत्पत्त्यभावे यच्छब्दानां विनियोजनम् ।
अक्लिष्टार्थकमेतन्न काव्यं सूरिभिरुच्यते[2] ॥ १५ ॥

---

१. ध्वनेरित्थं गुणीभूतव्यङ्ग्यस्य च समाश्रयात् ।
न काव्यार्थविरामोऽस्ति यदि स्यात् प्रतिभागुणः ॥
सत्स्वपि पुरातनकविप्रबन्धेषु यदि स्यात् प्रतिभागुणः । तस्मिंस्त्वसति न किञ्चिदेव कवेर्वस्त्वस्ति । (ध्वन्यालोकः ४, ६ तथा वृत्तिः)

२. यत्र प्रतीयमानोऽर्थः प्रम्लिष्टत्वेन भासते ।
वाच्यस्याङ्गतया वापि नास्त्यसौ गोचरो ध्वनेः ।
अव्युत्पत्तेरशक्तेर्वा निबन्धो यः स्खलद्गतेः ।
शब्दस्य स च न ज्ञेयः सूरिभिर्विषयो ध्वनेः ॥
(ध्वन्यालोकः, २. ३१-३२)

अव्युत्पत्तिभवो दोषः शक्त्यैवाव्रियते कवेः ।
किन्त्वशक्तिकृतो दोषः शीघ्रमेव प्रतीयते[1] ॥ १६ ॥

व्युत्पत्त्यभ्यासवैयर्थ्यं को लाभः शब्दलीलया ।
काव्ये यदि मनाङ् नास्ति प्रतिभा सा चमत्करी ॥ १७ ॥

कविशक्त्याः समुद्भूतं कौतुकगन्धसमन्वितम् ।
चमत्कारसमाकीर्णं काव्यं कस्मै न रोचते ॥ १८ ॥

सूक्तिर्गीतञ्च वाद्यं च लीलाश्च कान्तकान्तयोः ।
काव्यास्वादकरं सर्वं प्रातिभी प्रस्तुतिर्यदि ॥ १९ ॥

चमत्कारमयीं वाचं तदन्वितञ्च रूपकम् ।
श्रुत्वा दृष्ट्वा न हृष्यन्ति काष्ठकुड्यनिभा जनाः ॥ २० ॥

प्रतिभैव कवीनां साऽनर्घमाभरणं मतम् ।
तद्युक्तोऽकविः प्रोक्तस्तद्युक्तश्च महाकविः ॥ २१ ॥

चमत्कारकारिकविमहिमा—

महिमानं कवेर्वक्ष्ये चमत्कारप्रियोऽस्ति यः ।
स ह्लादैकमयीं सृष्टिं विधत्ते रुचिरां पराम् ॥ २२ ॥

निर्मीयते कुलालेन मृदा पात्रं मनोहरम् ।
कविना क्रियते पात्रं पदैरतिशयान्वितम् ॥ २३ ॥

काव्यसारं चमत्कारं स्वकृतौ निदधाति यः ।
कविपदमवाप्नोति कीर्तिमप्यतिभूयसीम् ॥ २४ ॥

बाह्यं जगदिदं तावद् द्योतते द्युतिना रवेः ।
भवत्यन्तर्जगद् दीप्तं महसा भूयसा कवेः ॥ २५ ॥

---

१. अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः ।
यस्त्वशक्तिकृतस्तस्य स झटित्यवभासते ॥

(तत्रैव, ३. ६ वृत्तिः)

चमत्कारप्रधानस्य स्रष्टा काव्यस्य यः कविः ।
जायते तत्प्रभावेण चमत्कारमयं जगत् ॥ २६ ॥

विभावादिसमुत्पन्नं समूहालम्बनात्मकम् ।
निष्पादयति यो ज्ञानं रसनिष्पत्तिहेतुकम् ॥ २७ ॥

आस्वादयति ततस्तावत् काव्यस्वादं विलक्षणम् ।
चमत्कारान्विते काव्ये स कविर्जयतेतराम् ॥ २८ ॥

पठित्वा विविधां विद्यां शास्त्राभ्यासं करोति सः ।
काव्योद्यानमधुग्राहे भ्राम्यति भ्रमरो यथा ॥ २९ ॥

गुरुसान्निध्यसम्प्राप्तः स्थिरचित्तः श्रमी कविः ।
विदधाति स सत्काव्यं नानारससमन्वितम् ॥ ३० ॥

साहचर्यं कविवरैः (श्रेष्ठैः) महाकाव्यार्थचर्वणम् ।
सुजनैः सह मित्रत्वं सौमनस्यं सुवेशता ॥ ३१ ॥

सदा स्वकाव्यव्याख्यानं वैरमत्सरवर्जनम् ।
परोन्मेषजिगीषा च व्युत्पत्त्यै सर्वशिष्यता ॥ ३२ ॥

वैदग्ध्यं पटुता भङ्गिः निःसङ्गैकान्तनिर्वृतिः ।
आशापाशपरित्यागः सन्तोषः सत्त्वशीलता[1] ॥ ३३ ॥

कविशिक्षेयमुक्तानुक्षेमेन्द्रेण पुरा शुभा ।
कविरेतामनुसरन् करोति काव्यमुत्तमम् ॥ ३४ ॥

इति चमत्कारविचारचर्चायां प्रथमो विचारः ॥

## द्वितीयो विचारः

चमत्कारलक्षणलक्ष्याणि—

अथेदानीं चमत्कारो लक्षणेनात्र लक्ष्यते ।
अस्य व्युत्पत्तिमाश्रित्य प्रवृत्तिञ्च समासतः ॥ ३५ ॥

---

१. कविकण्ठाभरणम्, १. ४; १४; १७.

चमत्करोति यः काव्ये चमत्कारः स उच्यते ।
आस्वादयति काव्यार्थान् सामाजिकस्य चेतसि ॥ ३६ ॥

विस्मयापरपर्यायः काव्यास्वादकरो हि यः ।
कौतुकात्सः समुद्भूतः कुतूहलविवर्धकः ॥ ३७ ॥

सुखरूपश्चमत्कारश्चित्तविस्तारको हि सः ।
सर्वरससमाकीर्णः काव्यशोभाविवर्धकः ॥ ३८ ॥

वर्णनाऽलौकिकी यत्र कविस्फुरणसूचिका ।
कवेः तन्निपुणं कर्म रसाविभिश्च पेशलम् ॥ ३९ ॥

चमत्कारसमाकीर्णं चित्तस्य द्रुतिकारणम् ।
काव्यं याति चमत्कारकाव्याभिधानतां प्रियाम् ॥ ४० ॥

नानाविधैर्गुणैर्युक्तं नानाभावसमाकुलम् ।
चमत्काराहितं काव्यं सर्वैरेव प्रशस्यते ॥ ४१ ॥

अस्य बहुविधं लक्ष्यं सर्वत्रैवोपलभ्यते ।
कृतिषु काव्यशास्त्रस्य कवीनां रचनासु च ॥ ४२ ॥

शून्ये वासगृहे बाला पतिं कामयते भृशम् ।
वर्धते च तयोर्मध्ये रतिश्चुम्बनकर्मणा[1] ॥ ४३ ॥

परां पुष्टिङ्गता सैव रसतामेति सत्वरम् ।
परिपुष्टः सश्रृङ्गारश्चमत्कारस्य कारणम् ॥ ४४ ॥

अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः ।
अहो दैवगतिश्चित्रा तथापि न समागमः[2] ॥ ४५ ॥

---

१. शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनैर्निद्रा व्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।
विश्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥ (साहित्यदर्पण १. ३ वृत्ति)

२. ध्वन्यालोक १. १२ वृत्ति ।

समासोक्त्याद्यलङ्कारैः शृङ्गाररससम्पदा ।
अङ्गीभूतश्चमत्कारः पुष्टिमत्राधिगच्छति ॥ ४६ ॥

राघवविरहज्वाला सह्याद्रिं तपते भृशम् ।
सीताकुशलवृत्तेन सा शान्तिमधिगच्छति[1] ॥ ४७ ॥

कोपहेतुश्च सम्भूता वानराणां कपिं प्रति ।
कथावस्तुचमत्कारः योऽसौ प्रीतिं प्रयच्छति ॥ ४८ ॥

भ्रम धार्मिक विश्वस्तः क्षुद्रः स श्वाद्य मारितः ।
तेन दृप्तेन सिंहेन गोदानदीनिवासिना[2] ॥ ४९ ॥

यो भ्रमणनिषेधार्थो ध्वनिनाऽत्रावगम्यते ।
चमत्कारं जनयति स बुधानन्ददायकम् ॥ ५० ॥

राकायामकलङ्कं चेदमृतांशोर्भवेद् वपुः ।
तस्या मुखं तदा साम्यपराभवमवाप्नुयात्[3] ॥ ५१ ॥

शृङ्गाररससम्पृक्ताऽतिशयोक्तिरसौ स्थिता ।
व्यतिरेकेण सार्धं सा चमत्कारस्य कारणम् ॥ ५२ ॥

चमत्कारस्य महत्त्वम्—

महत्त्वं कीर्त्यते चात्र चमत्कारस्य भूयसा ।
लोकोत्तरस्वरूपस्य गिरामविषयस्य च ॥ ५३ ॥

---

१. राघवविरहज्वालासन्तापितसह्यशैलशिखरेषु ।
शिशिरे सुखं शयानाः कपयः कुप्यन्ति पवनतनयाय ॥
(रसगङ्गाधरः, १. १ वृत्तिः)

२. भ्रम धार्मिक विश्वस्तः स श्वाद्य मारितस्तेन ।
गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन ॥
(काव्यप्रकाशः, ५. ४७ वृत्तिः)

३. काव्यप्रकाशः, १०. ४५२.

ऋचो मन्त्राश्च वेदानां शास्त्राणि निखिलानि वै ।
अजायन्त चमत्कारात्तस्माद् वै शब्दरूपिणः ॥ ५४ ॥

चमत्कारस्य दीप्तिर्या तया दीप्तं जगत् तथा ।
भानोर्भासा च भातीदं भावनं भुवनं यथा ॥ ५५ ॥

एतावदस्य माहात्म्यमेतावान् महिमा मतः ।
मानयन्त्रेण तत्केन मातुं शक्नोति को नरः ॥ ५६ ॥

येनाभिव्यज्यते काव्येऽलौकिकी चारुचर्वणा ।
चमत्कारः स विद्वद्भ्यः परां प्रीतिं प्रयच्छति ॥ ५७ ॥

भूषणं कविकण्ठानां चमत्कारो निगद्यते ।
सुगन्धा पुष्पमालेव ग्रीवामध्ये विराजते ॥ ५८ ॥

चारुचर्वणकाव्ये यश्चमत्कारोऽनुभूयते ।
सुखान्तरातिशायी स भवत्यतिविलक्षणः ॥ ५९ ॥

उपेक्षा नैव कर्तव्या चमत्कारस्य कर्हिचित् ।
उच्चावचविवेकस्तु बुधैः सर्वैरपेक्ष्यते ॥ ६० ॥

तिष्ठति सर्वभूतानां हृदयेष्वीश्वरो यथा ।
चमत्कारस्तथा विद्वच्चित्तभूमौ विराजते ॥ ६१ ॥

यथा धर्मपरैर्लोकैः पराशक्तिरुपास्यते ।
चमत्कृतिस्तथा नित्यं विबुधैः सेव्यतेतराम् ॥ ६२ ॥

चमत्कारविहीनेन कविकीर्त्यपहारिणा ।
किं कुर्मस्तेन काव्येन येन चित्तं न रञ्जितम् ॥ ६३ ॥

काव्यं स्यात्तदकाव्यं यच्चमत्कारेण वञ्चितम् ।
चन्द्रे गते सदा दृष्टमन्तरिक्षं मलीमसम् ॥ ६४ ॥

चमत्कारगुणं प्राप्य काव्यं तावद् विशिष्यते ।
अचमत्कारदोषेण निन्दां तल्लभते पराम् ॥ ६५ ॥

विलोकयति कान्तेति प्रीतिकरमिदं वचः ।
पश्यति स्त्रीति वाक्येन पराग्लानिः प्रजायते ॥ ६६ ॥

चमत्कारवियोगे तु काव्यस्य काव्यता गता ।
तस्य च स्पर्शमात्रेण भवति सा पुनरागता ॥ ६७ ॥

चर्वणीयश्चमत्कारश्चास्वाद्यैषा चमत्कृतिः ।
भोग्योऽयन्नु चमत्कारः सामाजिकाश्च भोगिनः ॥ ६८ ॥

चमत्कारकृतानन्दं स्वदन्ते रसिका जनाः ।
पुष्परसान् पिबन्ति वै मधुपामधुमक्षिकाः ॥ ६९ ॥

पुण्यवन्तः प्रमिण्वन्ति विदग्धास्तञ्च केचन ।
साक्षाद्वधि ब्रह्म पश्यन्ति योगिन एव केवलम् ॥ ७० ॥

स्थाने सम्यक्प्रयुक्तं तच्चमत्कारमयं वचः ।
लगति तत्तु हृद्देशं क्षिप्तो बाणो रणे यथा ॥ ७१ ॥

निरूपमगुणोपेतः वाग्विशेषैश्च संयुतः ।
सैष भव्यश्चमत्कारो विद्वद्भ्यो बहु रोचते ॥ ७२ ॥

श्रावं श्रावं कवेः काव्यं दर्शं दर्शञ्च रूपकम् ।
पायं पायं रसान् तांश्च तृप्यन्ति विरला जनाः ॥ ७३ ॥

वस्तुशब्दार्थसार्थेऽस्मिन् काव्ये भ्रमति सत्कविः ।
वाक्चमत्कारलोभो स वनान्तमधुपायते[1] ॥ ७४ ॥

---

१. सुकविरतिशयार्थी वाक्चमत्कारलोभादभिसरति मनोज्ञे वस्तुशब्दार्थसार्धे ।
भ्रमर इव वसन्ते पुष्पकान्ते वनान्ते नवकुसुमविशेषामोदमास्वादलोलः ॥
एकेन केनचिदनर्घमणिप्रभेण काव्यं चमत्कृतिपदेन विना सुवर्णम् ।
निर्दोषलेशमपि रोहति कस्यचित्ते लावण्यहीनमिव यौवनमङ्गनानाम् ॥
इत्युक्त एष सर्वविशेषचमत्कृतीनां सारः प्रकारपरभागविभाव्यमानः ।
कर्पूरवेध इव वाग्मधुगन्धयुक्ते-चैत्रासवस्य सहकाररसाधिवासः ।

वाराङ्गनाङ्गसौन्दर्यं सुवर्णं रत्नसङ्गतम् ।
चमत्कृतिमयं काव्यं कस्य चित्ते न रोहति ॥ ७५ ॥

चमत्कारस्य सङ्गेन काव्योत्कर्षः प्रकर्षते ।
सहकाररसो नूनमासवास्वादवर्धकः[1] ॥ ७६ ॥

चमत्कारो हि काव्यस्य शब्दार्थेषु तथा स्थितः ।
यथाङ्गनाङ्गमध्ये तल्लावण्यमधितिष्ठति[2] ॥ ७७ ॥

कवित्वशक्तिसम्पन्नो नैपुण्याभ्याससंयुतः ।
चमत्कारसमाहर्ता चमत्कारस्य चिन्तकः ॥ ७८ ॥

बहुभाषाविशेषज्ञो नैकशास्त्रविचक्षणः ।
अनासक्तो ह्याप्तकामो वीतरागो जितेन्द्रियः ॥ ७९ ॥

काव्यं तु कुरुते कश्चित् प्रतिभावान् महान् कविः ।
करोति शास्त्रनिर्माणं जडधीरपि शिक्षितः[3] ॥ ८० ॥

समीक्षकमहिमा—

कविः करोति सत्काव्यं तद् व्याख्याति समीक्षकः ।
काव्यगतश्चमत्कारो ह्यालोचकेन मृग्यते ॥ ८१ ॥

व्याख्याभावे तु काव्यस्य महत्त्वं केन वेद्यते ।
गुणदोषविवेकस्तु समीक्षयैव जायते ॥ ८२ ॥

लोचनेन विना यद्वत् पदार्थो न विभाव्यते ।
विनैवालोचनं तद्वत् काव्यार्थो नैव बुध्यते ॥ ८३ ॥

---

१. कविकण्ठाभरण ३, १-३

२. प्रतीयमानं पुनरन्यदेव, वस्त्वस्ति वाणीषु महाकवीनाम् ।
यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ॥
(ध्वन्यालोकः १. ४)

३. गुरूपदेशादध्येतुं शास्त्रं जडधियोऽप्यलम् ।
काव्यं तु जायते जातु कस्यचित् प्रतिभावतः ॥
(भामहकृतकाव्यालङ्कारः, १. ५)

अम्बुमध्याद् यथा हंसैर्दुग्धं निष्कास्यते बहिः ।
तथा काव्याच्चमत्कारो गृह्यते तत्ववेतृभिः ॥ ८४ ॥

देलीदीपकन्याये स्थितो ह्यालोचनाप्रियः ।
दर्शयति निजां बुद्धिं दुर्लभांश्च गुणान् कवेः ॥ ८५ ॥

इति चमत्कारविचारचर्चायां द्वितीयो विचारः ॥

## तृतीयो विचारः

चमत्कारसम्प्रदायप्रवर्तकः—

अस्ति कश्मीरभूमिर्या कुङ्कुमकाव्ययोः स्थली[1] ।
वसति शारदा यस्यां भारतमूर्ध्नि या स्थिता ॥ ८६ ॥

तस्यां जाता महीयांसः कवयः क्रान्तदर्शिनः ।
काव्यमर्मविदो विज्ञा आचार्याः काव्यशास्त्रिणः ॥ ८७ ॥

तत्र देशे समुत्पन्नः क्षेमेन्द्रोऽसौ महामतिः ।
मार्गं चमत्कृतेः पूर्वं प्रावर्तयत् प्रयत्नतः[2] ॥ ८८ ॥

ततस्तमन्वधावंस्ते मम्मटादिमनीषिणः ।
चमत्कारपथं प्राप्य ते कृतकृत्यातां गताः ॥ ८९ ॥

कविभिः काव्यशास्त्रज्ञैः प्रत्यक्षतः परोक्षतः ।
सर्वविधेषु काव्येषु चमत्कारस्थितिर्मता[2] ॥ ९० ॥

---

१. सहोदराः कुङ्कुमकेसराणां भवन्ति नूनं कवितविलासाः ।
न शारदादेशमपास्य दृष्टस्तेषां तदन्यत्र मया प्ररोहः ॥
(विक्रमाङ्कदेवचरितम्, १. २१)

२. न हि चमत्काररहितस्य कवेः कवित्वं काव्यस्य वा काव्यत्वम् ।
(कविकण्ठाभरणम्, ३. १ वृत्तिभागः)

प्रशंसन्ति चमत्कारं चमत्कृतधियो हि ये ।
प्राचीनास्ते नवीनास्ते ह्यतिनवीनकोविदाः ॥ ९१ ॥
चमत्कारस्य सम्बन्धे पूर्वं न प्रतिपादितम् ।
विशिष्टं स्वमतं तैस्तु प्रावर्तनैर्भरतादिभिः ॥ ९२ ॥
परं तद्विषये पश्चादाचार्यैः परवर्तिभिः ।
प्रत्यक्षतः स्फुटं प्रोक्तं क्षेमेन्द्रमम्मटादिभिः ॥ ९३ ॥
पूर्वं ह्रस्वास्ततो दीर्घा भवन्ति ये शनैः-शनैः ।
शास्त्राणां ते समारम्भाः प्रवाहाः सरितां यथा[1] ॥ ९४ ॥
एवमेष चमत्कारः सूक्ष्मरूपः पुराऽभवत् ।
विकासभावमासाद्य सम्प्रदायत्वमागतः ॥ ९५ ॥
रसालङ्कारवक्रोक्तिध्वनिरीतिसमाश्रिताः ।
सम्प्रदायाः पुरा पञ्च काव्यशास्त्रे प्रतिष्ठिताः ॥ ९६ ॥
चमत्कारः परं तेषां मध्ये स्थानमवाप नो ।
प्रभुत्वमन्यतत्त्वानामभवच्छास्त्रसम्मतम् ॥ ९७ ॥
क्षेमेन्द्रेण तदागत्य सूक्ष्मरूपेण संस्थितः ।
उपेक्षितश्चमत्कारः शास्त्रेऽस्मिन् सुप्रतिष्ठितः ॥ ९८ ॥
चमत्कारं स्थिरीकर्तुं रसालङ्कारवर्तिनम् ।
निष्कर्षत इदं प्रोक्तं वचस्तेन मनीषिणा ॥ ९९ ॥
कवेः तस्य कवित्वं नो नापि काव्यस्य काव्यता ।
नास्ति यत्र चमत्कारः काव्यसर्वस्वताङ्गतः[2] ॥ १०० ॥

---

१. सरितामिव प्रवाहास्तुच्छाः प्रथमं यथोत्तरं विपुलाः ।
ये शास्त्रसमारम्भा भवन्ति लोकस्य ते वन्द्याः ॥
(काव्यमीमांसा द्वितीयोऽध्यायः)

२. न हि चमत्काररहितस्य कवेः कवित्वं काव्यस्य वा काव्यत्वम् ।
(कविकण्ठाभरणम्, ३. १, वृत्तिः)

औचित्यं कारणं प्रोक्तं चमत्कारस्य तेन तत् ।
रसजीवितसम्भूतं यत् काव्ये चारुचर्वणे[1] ॥ १०१ ॥

काव्यलक्षणम्—

काव्यस्य लक्षणं प्रोक्तं बहुभिः कोविदैः पुरा ।
चमत्कारपदं नैतल् लक्षणे तैः समाहितम् ॥ १०२ ॥

सन्ति केचन विद्वांसश्चमत्कारपरायणाः ।
चमत्कारप्रधानं तैरुक्तं काव्यस्य लक्षणम् ॥ १०३ ॥

बुधैर्निगदितं तावच्चमत्कारसमन्वितम् ।
त्रिप्रकारकमेतत्तु प्रोच्यते काव्यलक्षणम् ॥ १०४ ॥

शब्दार्थौ सचमत्कारौ गुणालङ्कारभूषितौ ।
लोकोत्तरं तु तत् काव्यं प्राचां काव्यविदां प्रियम्[2] ॥ १०५ ॥

---

१. औचित्यस्य चमत्कारिणश्चारुचर्वणे ।
रसजीवितभूतस्य विचारं कुरुतेऽधुना ॥
(औचित्यविचारचर्चा कारिका ३)

अत्र चमत्कारिणः इति पदस्य द्वौ अर्थौ—चमत्कारयुक्तस्य चमत्कारकारिणश्च । द्वितीयमर्थं गृहीत्वा औचित्यं चमत्कारस्य कारणं मतम् ।

आचार्यमम्मटेन चमत्कारिपदस्य चमत्कारकारिपदस्य च प्रयोगो विहितः— ··· वाच्यस्यैव चमत्कारित्वात् ।
(काव्यप्रकाशः, १. ५, वृत्तिः)

··· अस्ति कश्चित् स्वरूपस्य विशेषो यश्चमत्कारकारी ··· ···
(तत्रैव ४. ११० वृत्तिः)

२. (क) तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि ।
(काव्यप्रकाशः, १. ४)

(ख) वागर्थौ सचमत्कारौ काव्यं काव्यविदो विदुः ॥
(चमत्कारचन्द्रिका प्रथमो विलासः, पृ० ३)

विशिष्टशब्दरूपस्य काव्यस्यात्मा चमत्कृतिः ।
प्राधान्यं यत्र शब्दस्य मतं नव्यैरिदं स्मृतम्[1] ॥ १०६ ॥

काव्यं स्फुरच्चमत्कारं ध्वन्यलङ्कारमण्डितम् ।
रसान्वितं सशब्दार्थमतिनव्यैः प्रशस्यते[2] ॥ १०७ ॥

छन्दोभिर्ललितैर्बद्धं भाषासौन्दर्यपूरितम् ।
काव्यं तदुत्तमं लोकैः स्वरैक्येन निगद्यते ॥ १०८ ॥

कविवाङ्निर्मितिः काव्यं निपुणं कविकर्म तत् ।
सबीजो हि कविर्ज्ञेयः सर्वागमकोविदः ॥ १०९ ॥

सरसः प्रतिभाशाली यदि स्यादुत्तमस्तदा[3] ।
भवति रचना त्वेषा चमत्कारेण सम्प्लुता[4] ॥ ११० ॥

रसभावचमत्कारान्यतमप्राणपेशलः ।
काव्यं शब्दार्थसन्दर्भोऽलौकिकानन्दसुन्दरः ॥ १११ ॥

सगुणालङ्कृतिः प्रीत्यै यथा दोषैस्तथा न सः ।
रसवर्णानुरूपा च रीतिस्तत्रोपकारिणी[5] ॥ ११२ ॥

---

१. विशिष्टशब्दरूपस्य काव्यास्यात्मा चमत्कृतिः ।
उत्पत्तिभूमिः प्रतिभा मनागत्रोपपादितम् ॥
हरिप्रसादकृतकाव्यालोकः डॉ० बी० राघवन् स्टडीज ऑफ सम कन्सेप्ट्स आफ अलङ्कारशास्त्र, पृ० २७०.

२. पण्डितराजजगन्नाथछज्जूरामप्रभृतयः आचार्याः अतिनव्याः ॥

३. अलङ्कारकौस्तुभः, १. २-३.

४. असाधारणचमत्कारकारिणी रचना हि निर्मितिः तदेव १. ३ वृत्तिः ।

५. ... किञ्च, स शब्दार्थसन्दर्भः काव्यमुच्यते यो रसभावचमत्कारान्यतमप्राणपेशलः स्यात् ।
रसाः शृङ्गारादयः । भावा देवादिविषयकरत्यादिरूपा वक्ष्यमाणाः ।
चमत्कारः शब्दार्थालङ्कारादीनां कुशलप्रयोगजन्या चित्तचमत्कृतिः ।

चाकचक्यं विधत्ते यः सहृदयस्य चेतसि ।
चितिरूपश्चमत्कारः काव्यसर्वस्वमुच्यते[1] ॥ ११३ ॥

चमत्कारकाव्यभेदाः—

त्रयो भेदास्तु काव्यस्य चमत्कारसमाश्रिताः ।
विश्वेश्वरेण देवेन विश्वनाथेन च स्मृताः ॥ ११४ ॥

शब्दार्थरूपकाव्यं तत् तावच्छब्दार्थकोविदैः ।
त्रैविध्येन चमत्कारि चमत्कारितरं यथा ॥ ११५ ॥

चमत्कारितमं चेति प्रविविच्य निर्दशितम् ।
शब्दचारुत्वतात्पर्ये चमत्कारीति कथ्यते ॥ ११६ ॥

वाच्यचारुत्वतात्पर्ये चमत्कारितरं मतम् ।
व्यङ्ग्यस्य च गुणीभावे तदेवाहुर्मनीषिणः ॥ ११७ ॥

प्रत्येयार्थचारुत्वे चमत्कारितमं मतम् ।
गद्यं पद्यं च मिश्रञ्चेत्येतत्सर्वं त्रिधा स्मृतम्[2] ॥ ११८ ॥

---

एतेषामन्यतमः कोऽपि प्राणाः प्राणप्रदधर्मा इव तैः पेशलः । चमत्कारकथनात् रसादिरहिताया अपि सहृदयाह्लादकारिण्या रचनायाः काव्यत्वं प्रतिपादितम् ।

वागीश्वरकृतवैदिकसाहित्यसौदामिनी २. ७-८ तथा वृत्तिः ।

१. विद्युत्समुन्मेष इवान्धकारे करोति या चेतसि चाकचक्यम् ।
वक्रोक्तिवैचित्र्यविरोधिताद्यैश्चितिश्चमत्कारपदोदिताऽसौ ॥

काव्यं पठतो रूपकं वा पश्यतः सहृदयस्य सङ्कल्पविकल्पात्मके मनसि सम्भावनातीतस्य कस्यचिदर्थस्य सहसाऽऽलादात्मिका चितिः प्रकाश एव चमत्कारः । कल्पनाप्रधानम् उक्तिवैचित्र्यात्मकम् विरोधधर्मम् विविधालङ्कारैरुपस्कृतं चित्रं काव्यं स्ववैलक्षण्येन चित्तं यथा चमत्करोति न तथा रसकाव्यम् ।

(वैदिकसाहित्यसौदामिनी २. ३ तथा वृत्तिः)

२. विश्वेश्वरकविचन्द्रकृतचमत्कारचन्द्रिका, पृ० ७३-७४ ; ७७-७८.

यत्र व्यङ्ग्यचमत्कारो वाच्याधिकतरो भवेत् ।
ध्वनिकाव्यमिदं प्राहुः पारिभाविकमुत्तमम् ॥ ११९ ॥
वाच्याधिकचमत्कारि व्यङ्ग्यं यत्र न भासते ।
तदेव मध्यमं काव्यं कविवृन्दैर्निगद्यते ॥ १२० ॥
अलङ्कारकृतानन्दसन्दोहो यत्र जायते ।
चित्रं शब्दार्थभेदेन द्विधा तत् परिकीर्तितम्[1] ॥ १२१ ॥
शब्दार्थयोरलङ्काराश्चमत्कारेण संयुताः ।
काव्यपदं समायान्ति यमकरूपकादयः[2] ॥ १२२ ॥
दशविधश्चमत्कारः क्षेमेन्द्रप्रतिपादितः ।
दृष्टिविषयतां याति कवीनां कण्ठभूषणे[3] ॥ १२३ ॥
प्रदर्शितानि लक्ष्याणि तेन तत्र चमत्कृतेः ।
तस्या अलौकिकं सर्वं स्वरूपं विशदीकृतम् ॥ १२४ ॥

चमत्कारसम्प्रदायवैशिष्टचम् —

सैव गोष्ठी मता यत्र कविराजो विराजते ।
कविराजस्तु स प्रोक्तः सूक्तमाह च यः सुधीः ॥ १२५ ॥
तत्सूक्तं नु ध्वनिर्यत्र सैव ध्वनिर्ध्वनिर्मतः ।
क्षिप्रं सचेतसश्चित्ते सूते यस्तु चमत्क्रियाम् ॥ १२६ ॥

---

१. साहित्यसुधासिन्धुः, १. ५-७.

२. शब्दालङ्कारचमत्कारि यथा··· ···अर्थालङ्कारचमत्कारि यथा······ अत्र चोत्प्रेक्षा चमत्कारिणी । अत्रोभयत्र सूर्यराजविषयकभावसत्त्वेऽप्यनुप्रासोत्प्रेक्षे चमत्कारहेतू । (तत्रैव १. ७ वृत्तिः)

३. तत्र दशविधश्चमत्कारः—अविचारितरमणीयः, विचार्यमाणरमणीयः, समस्तसूक्तव्यापी, सूक्तैकदेशदृश्यः, शब्दगतः, अर्थगतः, शब्दार्थगतः, अलङ्कारगतः, रसगतः, प्रख्यातवृत्तिगतश्च । (कविकण्ठाभरणम्, ३. २ वृत्तिः)

काव्यपुरुषदेहे स आत्मरूपेण संस्थितः ।
करोति परमां प्रीतिं ब्रह्मानन्दसहोदरीम् ॥ १२७ ॥

काव्यसारश्चमत्कारः काव्यं व्यर्थं च तं विना ।
रसहीनं फलं तावद् भुज्यते नैव केनचित् ॥ १२८ ॥

अचमत्कारि काव्यं तु काव्येषु नैव गण्यते ।
निर्गतात्मा तु यो देहः शवसञ्ज्ञां प्रयाति सः ॥ १२९ ॥

समायान्ति तथा यान्ति रसालङ्काररीतयः ।
स्थिरीभूते चमत्कारे कल्लोला इव वारिधौ ॥ १३० ॥

तत्त्वान्तराणि काव्ये तु भवन्तु न भवन्तु वा ।
विस्मयगर्भश्चमत्कारः स्थिरं काव्यस्य जीवितम् ॥ १३१ ॥

कामं सन्तु रसास्तस्मिन्नलङ्काराश्च भूरिशः ।
उपयाति न पूर्णत्वं चमत्कारं विना तु तत् ॥ १३२ ॥

स एव काव्यजीवातुः काव्यस्य प्राणनं तथा ।
तेनैव सारता तस्य तं विना सारहीनता ॥ १३३ ॥

चमत्कारात्मके काव्ये तदङ्गानि रसादयः ।
अङ्गीभूयोपकुर्वन्ति पुष्णन्ति तञ्च सर्वदा ॥ १३४ ॥

लिङ्गशरीरमेतेषां तत्त्वानां सहवर्तिनाम् ।
उपस्कारकभूतानां चमत्कारात्मनि स्थितम् ॥ १३५ ॥

यथा महानदाः सर्वे गच्छन्ति सागरं प्रति ।
निखिलाः सम्प्रदायास्ते चमत्कारं तथा गताः ॥ १३६ ॥

रसे सारश्चमत्कारो रीतौ सारश्चमत्कृतिः ।
ध्वनौ सारश्चमत्कारः सोऽलङ्कारेऽपि वर्तते ॥ १३७ ॥

रससारश्चमत्कारस्तं विना न रसो रसः ।
सैव सारो ध्वनेश्चापि तं विना न ध्वनिर्ध्वनिः ॥ १३८ ॥

न तिष्ठन्ति विना तेन गुणालङ्काररीतयः ।
एवमस्य मता काव्येऽचला चावश्यिकी स्थितिः ॥ १३९ ॥

औचित्यं वृत्तिरीती ते ध्वनिरसौ रसादयः ।
चमत्कारं हि सेवन्ते मन्त्रिणो नृपतिं यथा ॥ १४० ॥

पदपदार्थवाक्येषु वाक्यार्थेऽथ प्रबन्धके ।
चमत्कारः स संयोज्यः काव्यसौन्दर्यवृद्धये ॥ १४१ ॥

जन्यतेऽसौ चमत्कारस्त्वलङ्कारसादिभिः ।
जन्यजनकभावो वै तन्मध्ये सुप्रतिष्ठितः ॥ १४२ ॥

चमत्कारस्तु विज्ञानामानन्दपरिवाहकृत् ।
गुणं रीतिं रसं वृत्तिं पाकं शय्यामलङ्कृतिम् ॥ १४३ ॥

सप्तैतानि चमत्कारकारणं ब्रुवते बुधाः ।
सप्ताङ्गसङ्गतं काव्यं साम्राज्यमिव भासते[1] ॥ १४४ ॥

स्वाम्यमात्यसुहृत्कोशो राष्ट्रदुर्गबलानि च ।
अङ्गानि सप्तसङ्ख्यानि शास्त्रेषु प्रथितानि वै ॥ १४५ ॥

यथा सप्ताङ्गराज्ये तु राजैव राजतेतराम् ।
तथा मध्ये रसादीनां चमत्कारो विशिष्यते ॥ १४६ ॥

सर्वाणीमानि तत्त्वानि काव्यशोभाकराणि वै ।
समवेतानि जायन्ते भावयन्ति परस्परम् ॥ १४७ ॥

औचित्यजचमत्कारः—

औचित्यगरिमा योऽस्ति यच्चमत्कारगौरवम् ।
क्षेमेन्द्रेण पुरा प्रोक्तं तत्सर्वं युक्तिपूर्वकम् ॥ १४८ ॥

उचितं प्राहुराचार्याः सदृशं किल यस्य यत् ।
उचितस्य च यो भावस्तदौचित्यं प्रचक्षते[2] ॥ १४९ ॥

---

१. परिवर्तितपाठः चमत्कारस्तु विदुषामानन्दपरिवाहकृत् ।
चमत्कारचन्द्रिका प्रथमो विलासः, पृ० २-३

२. औचित्यविचारचर्चा कारिका ७

अनौचित्याद् ऋते नान्यच्चमत्कारस्य बाधकम् ।
औचित्यान्नापरं काव्ये दृष्टं तदुपकारकम् ।। १५० ।।

यथौचित्यस्य निर्वाहो लोकेऽस्मिन् क्रियते बुधैः ।
तथा विधीयते काव्ये विबुधैस्तैः कवीश्वरैः ।। १५१ ।।

औचित्येन तु हीनं यच्छोभां नैव करोति तत् ।
कण्ठोचितस्तु यो हारः किं पादालङ्कृतिर्भवेत् ।। १५२ ।।

अनौचित्यं सदा त्याज्यं काव्यहानिकरं हि तत् ।
मक्षिकापतनं दुग्धे भवति ग्लानिकारकम् ।। १५३ ।।

हातव्यं काव्यमश्लीलं विषाक्तं यच्च भोजनम् ।
योनिजरोगसङ्ग्रस्तो यश्च विश्वासघातकः ।। १५४ ।।

रसादीनां विभावादिः कारणं प्रोच्यते बुधैः ।
रसभावगतौचित्यं हेतुस्तद्धि चमत्कृतेः ।। १५५ ।।

औचित्यजचमत्कारः काव्यात्मा यः प्रकीर्तितः ।
काव्ये तस्य निवेशस्तु कर्म प्रोक्तं महाकवेः ।। १५६ ।।

औचित्येन समाकीर्णं चमत्कारसमन्वितम् ।
ललितैश्च पदैर्युक्तं काव्यं कस्मै न रोचते ।। १५७ ।।

मणिकाञ्चनयोर्योगाद् भूषणं भाति वै यथा ।
तथैवैतद्द्वयीयोगात् काव्यमपि सुशोभते ।। १५८ ।।

यत्र व्यङ्ग्यचमत्कारो ह्यौचित्यमिश्रितो भवेत् ।
तत्रोत्तमोत्तमं काव्यं समीक्षकवरैः स्मृतम् ।। १५९ ।।

तस्मात् सर्वेषु नाट्येषु काव्येषु विविधेषु वा ।
औचित्यजचमत्कारसमावेशो विधीयते ।। १६० ।।

उपसंहारः—

अपायात्स सदा पायाच्चमत्कारोऽखिलं जगत् ।
धर्मार्थकाममोक्षाणां सद्यः सिद्धिर्भवेन्नृणाम् ।। १६१ ।।

चमत्कारे रतिर्भूयाच् चमत्कारे मतिर्भवेत् ।
प्रसीदतु चमत्कारः कविवाक्षु स तिष्ठतु[1] ॥ १६२ ॥

चमत्कारस्य चर्चेयं यथाबुद्धि कृता मया ।
विबुधा यदि तुष्येयुः श्रमो मे सफलो भवेत् ॥ १६३ ॥

वेदज्ञानगभस्तिमुज्ज्वलधियः पश्यन्ति वै वैदिका
ज्ञाता निर्मलबुद्धिभिस्तु मुनिभिर्वेदान्तविद्या च या ।
सर्वान् रञ्जयितुञ्चमत्कृतिरियं काव्येषु या व्यज्यते
सेयं पातु सदा निजं जनमिमञ्जाड्यञ्च बुद्धेर्हरेत् ॥ १६४ ॥

त्यक्त्वोद्वेगकरं जगत्तु यतते मोक्षाय योगी महान्
कश्चित्कामयते धनञ्च विपुलं धर्मं च कामं परः ।
आवेगान् परिहाय सैष मनसः श्रद्धान्वितो ग्रन्थकृद्
वाग्देव्याः परिचारकस्तु भवतात् सेव्याञ्च तां शाश्वतीम् ॥१६५॥

इति रामप्रतापवेदालङ्कारविरचितायां चमत्कारविचारचर्चायां
तृतीयो विचारः ॥



---

१. गीतेषु गाथास्वथ देशभाषाकाव्येषु दद्यात् सरसेषु कर्णम् ।
वाचां चमत्कारविधायिनीनां नवार्थचर्चासु रुचिं विदध्यात् ॥
कविकण्ठाभरणम् ३. १८

# चमत्कारविचारचर्चाकारिकाणां वर्णानुक्रमणिका


| कारिका | सङ्ख्या | पृष्ठम् |
|---|---|---|
| अचमत्कारि | १२९ | १६ |
| अथेदानीं | ३५ | ४ |
| अनुरागवती | ४५ | ५ |
| अनौचित्यं | १५३ | १८ |
| अनौचित्या | १५० | १८ |
| अपायात् | १६१ | १८ |
| अम्बुमध्याद् | ८४ | १० |
| अलङ्कारकृता | १२१ | १५ |
| अव्युत्पत्तिभवो | १६ | ३ |
| अस्ति कश्मीर | ८६ | १० |
| अस्य बहु | ४२ | ५ |
| आचार्याणां | ५ | १ |
| आस्वादयति | २८ | ४ |
| उचितं प्राहुरा° | १४९ | १७ |
| उन्मज्जन्ति | २ | १ |
| उपेक्षा नैव | ६० | ७ |
| ऋचो मन्त्रा | ५४ | ७ |
| एतावदस्य | ५६ | ७ |
| एवमेष | ९५ | ११ |
| औचित्यं बृति | १४० | १७ |
| औचित्यगरिमा | १४८ | १७ |
| औचित्यङ्कारणम् | १०२ | १२ |

| कारिका | सङ्ख्या | पृष्ठम् |
|---|---|---|
| औचित्यज | १५६ | १८ |
| औचित्येन तु | १५२ | १८ |
| औचित्येन समा | १५७ | १८ |
| कविः करोति | ८१ | ९ |
| कवित्वश | ७८ | ९ |
| कविभिः | ९० | १० |
| कविवाङ् निर्मितिः | १०९ | १३ |
| कविशक्त्याः | १८ | ३ |
| कविशिक्षेय | ३४ | ४ |
| कवेस्तस्य | १०० | ११ |
| कामं सन्तु | १३२ | १६ |
| काव्यं स्फुरच्च | १०७ | १३ |
| काव्यं स्यात् | ६४ | ७ |
| काव्यन्तु | ८० | ९ |
| काव्यपुरुष | १२७ | १६ |
| काव्यसारञ्च | २४ | ३ |
| काव्यसारश्च | १२८ | १६ |
| काव्यस्य लक्षणं | १०२ | १२ |
| काव्यस्य श्रुतिना | ९ | २ |
| कोपहेतु | ४८ | ६ |
| क्षेमेन्द्रेण | ९८ | ११ |
| गुरुसान्निध्य | ३० | ४ |
| चकचकश्चम | ३ | १ |
| चमत्करोति | ३६ | ५ |
| चमत्कारं स्थिरी | ९९ | ११ |

| कारिका | सङ्ख्या | पृष्ठम् |
|---|---|---|
| चमत्कारः परं | १७ | ११ |
| चमत्कारकृता | ६९ | ८ |
| चमत्कारगुण | ६५ | ७ |
| चमत्कारज | १ | १ |
| चमत्कारप्रधानस्य | २६ | ४ |
| चमत्कारमयीं वाचं | २० | ३ |
| चमत्कारवियोगे | ६७ | ८ |
| चमत्कारविहीनेन | ६३ | ७ |
| चमत्कारसमा | ४० | ५ |
| चमत्कारस्तु | १४३ | १७ |
| चमत्कारस्य चर्चे | १६३ | १ |
| चमत्कारस्य दीप्ति | ५५ | ७ |
| चमत्कारस्य सङ्गेन | ७६ | ९ |
| चमत्कारस्य सम्बन्धे | ९७ | ११ |
| चमत्कारात्म | १३४ | १६ |
| चमत्कारितम | ११६ | १४ |
| चमत्कारे रति | १६२ | १९ |
| चमत्कारो हि | ७७ | ९ |
| चर्वणीयश्च | ६८ | ८ |
| चाकचक्यं विघ्न° | ११३ | १४ |
| चारुचर्वण | ५६ | ७ |
| छन्दोभि लं° | १०८ | १३ |
| जन्यतेऽसौ | १४२ | १७ |
| ततस्तम | ८९ | १० |
| ततो यो | १० | २ |
| तत्त्वान्तराणि | १३१ | १६ |

| कारिका | सङ्ख्या | पृष्ठम् |
|---|---|---|
| तत्र देशे | ८८ | १० |
| तत्सूक्तं | १२६ | १५ |
| तस्मात् | १६० | १८ |
| तस्यां जाता | ८७ | १० |
| तिष्ठति | ६१ | ७ |
| त्यक्त्वो | १६५ | १९ |
| त्रयो भेदास्तु | ११४ | १४ |
| दशविधश्च | १२३ | १५ |
| दुर्गमः | ६ | १ |
| देहलीदीपक | ८५ | १० |
| न काव्यार्थविरामो | १३ | १ |
| न तिष्ठन्ति | १३९ | १६ |
| नानाविधं | ४१ | ५ |
| निरुपमगुणो | ७२ | ८ |
| निर्मीयते | २३ | ३ |
| पठित्वा | २९ | ४ |
| पदपदार्थं | १४१ | १७ |
| परं तद्विषये | ९३ | ११ |
| परांपुष्टि | ४४ | ५ |
| पुण्यवन्तः | ७० | ८ |
| पूर्वं ह्रस्वा | ९४ | ११ |
| प्रज्ञा सा | १२ | १ |
| प्रणम्य | ४ | २ |
| प्रतिभैव कवीनां | २१ | ३ |
| प्रत्येयार्थं | ११८ | १४ |
| प्रदर्शितानि | १२४ | १५ |

| कारिका | सङ्ख्या | पृष्ठम् |
|---|---|---|
| प्रशंसन्ति | ९१ | ११ |
| प्राक्तनै | ८ | १ |
| बहुभाषा | ७९ | ९ |
| बाह्यं जगदि | २५ | ३ |
| बुधैर्निगदितं | १०४ | १२ |
| भूषणं कवि | ५८ | ७ |
| भ्रम धार्मिक | ४९ | ६ |
| मणिकाञ्चन | १५८ | १८ |
| महत्त्वं कीर्त्यते | ५३ | ६ |
| महिमानं | २२ | ३ |
| यत्र व्यङ्ग्यचमत्कारो वा | ११९ | १५ |
| यत्र व्यङ्ग्यचमत्कारो ह्यो | १५९ | १८ |
| यथा धर्मं | ६२ | ७ |
| यथा महानदा | १३६ | १६ |
| यथाशक्ति | ७ | १ |
| यथा सप्ताङ्ग | १४६ | १७ |
| यथौचित्यनि | १५१ | १८ |
| येनाभिव्यञ्ज्य | ५७ | ७ |
| यो भ्रमण | ५० | ६ |
| रसभाव | १११ | १३ |
| रससारश्च | १३८ | १६ |
| रसादीनां | १५५ | १८ |
| रसालङ्कार | ९६ | ११ |
| रसे सारश्च | १३७ | १६ |
| राकायामक | ५१ | ६ |
| राघवविरह | ४७ | ६ |

| कारिका | सङ्ख्या | पृष्ठम् |
|---|---|---|
| लिङ्गशरीर | १३५ | १६ |
| लोचनेन विना | ८३ | ९ |
| वराङ्गनाङ्ग | ७५ | ९ |
| वर्णनाऽलौकिक | ३९ | ५ |
| वस्तुशब्दा | ७४ | ८ |
| वाच्यचारुत्व | ११७ | १४ |
| वाच्याधिक | १२० | १५ |
| विभावादिसमु | २७ | ४ |
| विलोकयति | ६६ | ८ |
| विशिष्ट | १०६ | १३ |
| विस्मयापर | ३७ | ५ |
| वेदज्ञान | १६४ | १९ |
| वैदग्ध्य | ३३ | ४ |
| व्याख्याभावे | ८२ | ९ |
| व्युत्पत्त्यभ्यास | १७ | ३ |
| शक्तिजाच्च | १४ | २ |
| शक्तिर्निपुणता | ११ | २ |
| शक्तिव्युत्पत्त्य | १५ | २ |
| शब्दार्थयो | १२२ | १५ |
| शब्दार्थरूपं | ११५ | १४ |
| शब्दार्थौ | १०५ | १२ |
| शून्ये वास | ४३ | ५ |
| शृङ्गाररस | ५२ | ६ |
| श्रावं श्रावं | ७३ | ८ |
| स एव काव्य | १३३ | १६ |
| सगुणाल | ११२ | १३ |

| कारिका | सङ्ख्या | पृष्ठम् |
| --- | --- | --- |
| सदा स्व | ३२ | ४ |
| सन्ति केचन | १०३ | १२ |
| सप्तैतानि | १४४ | १७ |
| समायान्ति | १३० | १६ |
| समासोक्त्या | ४६ | ६ |
| सरसः | ११० | १३ |
| सर्वाणीमा | १४७ | १७ |
| साहचर्यं कवि | ३१ | ४ |
| सुखरूप | ३८ | ५ |
| सूक्तिर्गीतञ्च | १९ | ३ |
| सैव गोष्ठी | १२५ | १५ |
| स्थाने सम्यक् | ७१ | ८ |
| स्वाध्यमा | १४५ | १७ |
| हातव्यं | १५४ | १८ |

# शुद्धिपत्रम्

| अशुद्धपाठः | शुद्धपाठः | कारिकासङ्ख्या | पृष्ठसङ्ख्या |
| --- | --- | --- | --- |
| मानसेषु या तिष्ठति | या समाराध्या कृपामयी | ५ | १ |
| शक्ति यथामति | यथाशक्त्यल्पधीरहम् | ७ | १ |
| काव्यस्य श्रुतिना रङ्ग | काव्यस्य श्रवणाद् रङ्गे | ९ | २ |
| ह्लादः | ह्लादो | १० | २ |
| नवोन्मेषण | नवोन्मेषेण | १२ | २ |
| प्रक्लिष्टार्थं | प्रश्लिष्टार्थं | १५ | २ |
| यत्वश | यस्त्वश | १ पा. टि. | ३ |
| काव्यसारं चम | काव्यसारञ्च | २४ | ३ |
| द्योतते द्युतिना | द्युत्या प्रद्योतते | २५ | ३ |
| व्युत्पत्यै | व्युत्पत्त्यै | ३२ | ४ |
| ततस्तावत् काव्यास्वा | चासौ वै काव्यास्वा | २८ | ४ |
| कौतुकात्स: | कौतुकात् स | ३७ | ५ |
| कवे: तन्नि | कवेस्तन्नि | ३९ | ५ |
| सश्रृङ्गार: | स श्रृङ्गार: | ४४ | ५ |
| चमत्कार: | चमत्कारो | ४८ | ६ |
| रूपिणा | रूपिण: | ५४ | ७ |
| बुधे: | बुधै: | ६० | ७ |
| तच्च | यच्च | ७१ | ८ |
| निरूपम | निरुपम | ७२ | ८ |
| सार्धे | सार्थे | १ पा. टि. | ८ |
| दनधर्मणि | दनर्घमणि | ,, | ८ |
| सर्ि शेष | सविशेष | ,, | ८ |
| युक्ते– | युक्तेश्चै | ,, | ८ |

| अशुद्धपाठः | शुद्धपाठः | कारिकासङ्ख्या | पृष्ठसङ्ख्या |
|---|---|---|---|
| वाराङ्गनाङ्ग | वराङ्गनाङ्ग | ७५ | ९ |
| वीतरागरागो | वीतरागो | ७९ | ९ |
| कृतकृत्याङ्गता: | कृतकृत्यताङ्गता: | ८९ | १० |
| चत्कार: | चमत्कार: | ९५ | ११ |
| शात्रे | शास्त्रे | ९६ | ११ |
| कवे: तस्य | कवेस्तस्य | १०० | ११ |
| चार चर्वणे | चारुचर्वणे | १०१ | १२ |
| गमकोविद: | गमेषु कोविद: | १०९ | १३ |
| प्रीत्य | प्रीत्यै | ११२ | १३ |
| साऽऽलादात्मिका | साऽऽह्लादात्मिका | पा. टि. | १४ |
| चीत्प्रेक्षा | चोत्प्रेक्षा | पा. टि. | १५ |

# V. V. RESEARCH INSTITUTE

## SOME SELECT PUBLICATIONS

1. A Vedic Word-Concordance (वैदिकपदानुक्रम-कोषः) in 5 Sections Containing 16 Parts Ed. by Āchārya Vishva Bandhu.
2. Ṛgveda (ऋग्वेदः) with Commentaries of Skanda-svāmin, Udgītha, Venkaṭa-Mādhava and Mudgala in 8 volumes edited by Āchārya Vishva Bandhu.
3. Atharvaveda (Śaunaka) अथर्ववेदः (शौनकीयः) with the Padapātha and Sāyaṇācārya's Commentary in 5 volumes, edited by Āchārya Vishva Bandhu.
4. ब्राह्मणोद्धार-कोषः (Brāhmaṇic Citations) edited by Āchārya Vishva Bandhu.
5. Vedic Textuo-linguistic Studies—Āchārya Vishva Bandhu.
6. Mahā - Subhāṣita - Saṁgraha, Vols. I to VII—Comp. Dr. Ludwik Sternbach, Ed. by S. B. Nair.
7. Ārṣeyakalpa with the Commentary of Varadarāja—Cr. ed. Dr. B. R Sharma.
8. Śānkhāyana-Āraṇyaka–Cr. Ed. Pandit Bhim Dev.
9. The Ṛgveda—Ram Gopal.
10. Kalpa-Sūtra (कल्पसूत्र-वेदिक वाङ्मय का बृहद् इतिहास) —Prof. Kundan Lal Sharma.
11. Vedānga (वेदाङ्ग-वैदिक वाङ्मय का बृहद् इतिहास) – Prof. Kundan Lal Sharma.
12. यजुर्वेद तथा सामवेद संहिताएं (वैदिक वाङ्मय का बृहद् इतिहास) —Prof. Kundan Lal Sharma.
13. Linguistic History of Uttarākhaṇḍa—Dr. D. D. Sharma.
14. Index of Papers submitted to the All-India Oriental Conference, Vol. IV, Sessions XXIII to XXXI (1966–82) - Dr. K. V. Sarma.